६३. वाचस्पत्यम् —(बृहद् संस्कृताभिधानम्) चौखम्बा संस्कृत सीरीज ऑफिस, वाराणसी-१ श्री तारानाथ भट्टाचार्य १९६२

६४. विष्णु पुराण—गीता प्रेस, गोरखपुर, सं०-१९६३

६५. वेदान्त पारिजात सौरभ—ब्रह्मसूत्रनिम्बार्कभाष्यम्— पं० ढुण्ढि-राजशास्त्रिणा संशोधितम्, प्रकाशक-चौखम्बा संस्कृत सीरीज ऑफिस, बनारस-१९३२

६६. वेदान्त पारिजात सौरभ—ब्रह्मसूत्र-श्री निम्बार्क वेदान्त, प्रकाशक— श्री निम्बार्क पीठ, १२ महाजनी टोला, इलाहाबाद-३, सम्वत् २०२०

६७. शाक्त दर्शनम्—पं० श्री चक्रेश्वर भट्टाचार्य दत्तै, गोहाटी-१९७०

६८. शारदातिलकम्—प्रकाशक—श्री जयकृष्णदास, हरिदास गुप्त, चौखम्बा-संस्कृत-सीरीज़ ऑफिस, बनारस सिटी— १९३४

६९. शिव पुराण—सम्पादक—श्रीराम शर्मा आचार्य, प्रकाशक—संस्कृति संस्थान, ख्वाजा कुतुब (वेदनगर), बरेली—१९६८

७०. शिवमहापुराण की दार्शनिक समालोचना—डॉ० रमाशंकर त्रिपाठी, प्रकाशक—हरिशङ्कर त्रिपाठी, अस्सी, वाराणसी, सन्-१९७५

७१. शिवयोगदीपिका—सदाशिव योगीश्वर विरचित, आनन्दाश्रम संस्कृत ग्रन्थावलिः, ग्रन्थाङ्कः-१३९ द्वितीयावृत्तिः

७२. शिव-संहिता—सम्पादक, डॉ० चमनलाल गौतम, प्रकाशक—संस्कृति संस्थान, ख्वाजा कुतुब (वेदनगर), बरेली (उ० प्र०), १९८२

७३. शिव-संहिता—सम्पादक—श्री रायबहादुर, श्री चन्द्र वसु, प्रकाशक— श्री सत्गुरु प्रकाशन, एस० एस० पी०, सन्-१९८१

७४. शिवस्वरोदय—अनुवादक पं० हरेकृष्ण शास्त्री, प्रकाशक—ठाकुरदास एण्ड सन्स, राजा दरवाजा, वाराणसी, सन् १९८०

७५. शैव-सिद्धान्त दर्शन—डॉ० कैलाशपति मिश्र, प्रकाशक—स्वामी राम-नरेश, अर्द्धनारीश्वर प्रकाशन २७, दीनदयाल नगर कालोनी नवाब गंज, वाराणसी-१०, सन् १९८२

७६. श्रीतन्त्रसार— सम्पादक, पं० मुकुन्दराम शास्त्री, काश्मीर संस्कृत ग्रन्थावलि, ग्रन्थाङ्क १७, सन् १९१८

७७. श्री निम्बार्क वेदान्त— आचार्य ललित कृष्ण गोस्वामी, प्रकाशक— श्री निम्बार्क पीठ, १२ महाजनी टोला, इलाहाबाद-३, सम्वत्-२०२०

७८. श्रीमदणुभाष्यम् - पाठकोपाह्वश्रीधरशर्मविरचितया, बालबोधिन्याख्य-टीकया समेतम्, भण्डारकर-प्राच्यविद्या-संशोधनमन्दिराधिकृतैः प्रकाशितम् सन् १९२६

७९. श्रीमद्देवीभागवत—सम्पादक, पं० रामतेजपाण्डेय, पण्डित पुस्तकालय, राजा दरवाजा, बनारस २०१२

८०. श्रीमद्भगवद्गीता—गीताप्रेस, गोरखपुर, सं०-२०२९

८१. श्रीमद्भागवत भक्त मनोरञ्जनी—श्री भगवत् प्रसादाचार्य विरचिता, सम्पादक—श्रीकृष्णशङ्कर शास्त्री, वि० सं०-२०२५

८२. श्री शिवदृष्टिः—श्री सोमानन्दनाथरचिता, श्रीमदुत्पलदेवकृतवृत्त्युपेता, सम्पादक—पं० मधुसूदन शास्त्री, काश्मीर संस्कृत ग्रन्थावलि—काश्मीर, सन्-१९३४

८३. श्रीशैवसिद्धान्त परिभाषा—श्री कविराजशेखर सूर्यभट्टारक विरचिता, प्रकाशक—तलकाडु आगमिक कृष्णदीक्षित 'श्रीमनोन्मनीकृपा' बेंगलोर, १९५८

८४. षट्चक्रनिरूपण और पादुकापञ्चम—तृतीय संस्करण, सम्पादक—श्री तारानाथ विद्यारत्न, प्रकाशक - बी० घोष, आगमानुसन्धान समिति कलकत्ता-१९४१

८५. षट्चक्रनिरूपण—सम्पादक, श्री स्वामी हंसस्वरूप, प्रकाशक—विज्ञान मन्दिर (विज्ञान प्रेस), ऋषिकेश (देहरादून) उ० प्र०, सन्-१९८०

८६. षडाम्नायतन्त्रम्—तन्त्रसंग्रह चतुर्थभाग, सम्पादक—श्री व्रजवल्लभ द्विवेदी, सम्पूर्णानन्द संस्कृत विश्वविद्यालय, सन्-१९८१

८७. सरल-राजयोग—स्वामी विवेकानन्द, अनुवादक—श्री पृथ्वीनाथ शास्त्री, प्रकाशक—श्री राम कृष्ण आश्रम, मध्य प्रदेश

८८. सर्वदर्शन-सङ्ग्रह—श्रीमन्माधवाचार्य, सम्पादक—डॉ० उमाशंकर शर्मा ऋषि, चौखम्बा विद्याभवन, वाराणसी—१९६४

८९. सिद्धसिद्धान्तपद्धति—गोरक्षनाथ, प्रकाशक—श्री १०८ पूर्णनाथ जी, संस्कृत टीकाकार—श्री पं० द्रव्येश झा शास्त्री । भाषाकार—पं० योगिभीष्मनाथ जी, संशोधक--पं० ज्ञानिराम शास्त्री वि० सं०—१९९६

९०. सिद्धसिद्धान्तपद्धति—सम्पादक, श्री रामलाल श्रीवास्तव, गोरखनाथ मन्दिर, गोरखपुर, सं० २०३८
९१. सौन्दर्यलहरी (श्री शंकराचार्य विरचिता, श्रीलक्ष्मीधर व्याख्यासमलङ्कृता, भावोपनिषद्, श्रीभास्करराजभाष्य सहिता देवीपञ्चस्तरी च), सम्पादक—पं० एन० एन० गणपति, मैसूर-१९५३
९२. संस्कृत-हिन्दी कोश—वामन शिवराम आप्टे, मोतीलाल बनारसीदास, दिल्ली-७, सन् १९६९
९३. हठयोग एक ऐतिहासिक परिप्रेक्ष्य एवं हठयोगप्रदीपिका—सुरेन्द्र कुमार शर्मा, प्रकाशक—ईस्टर्न बुक लिंकर्स, ५८२५, न्यू चन्द्रावल, जवाहर नगर, दिल्ली, सन् १९८५

## योग-उपनिषद्

९४. अद्वयतारकोपनिषद्—उपनिषत्-संग्रह—सम्पादक प्रो० जगदीशलाल शास्त्री, मोतीलाल बनारसीदास, दिल्ली, सन् १९८०
९५. अमृतनादोपनिषद्—वही।
९६. अवधूतोपनिषद्—वही
९७. क्षुरिकोपनिषद्—वही
९८. गर्भोपनिषद्—वही
९९. जाबालदर्शनोपनिषद्—वही
१००. तेजोबिन्दूपनिषद्—योग-उपनिषद:—सम्पादक, अ० महादेव शास्त्री, अड्यार पुस्तकालय मद्रास, १९२०
१०१. त्रिशिखिब्राह्मणोपनिषद्—वही
१०२. दर्शनोपनिषद्—वही
१०३. ध्यानबिन्दूपनिषद्—वही
१०४. नादबिन्दूपनिषद्—वही
१०५. पाशुपतब्राह्मणोपनिषद्—वही
१०६. ब्रह्मविद्योपनिषद्—वही
१०७. ब्रह्मोपनिषद्—उपनिषत्-संग्रह, सम्पादक, प्रो० जगदीशलाल शास्त्री, मोतीलाल बनारसीदास—दिल्ली, सन् १९८०
१०८. मण्डलब्राह्मणोपनिषद्—वही
१०९. योगकुण्डल्युपनिषद्—योग-उपनिषद:, अड्यार, १९२०
११०. योगचूडामण्युपनिषद्—वही
१११. योगतत्त्वोपनिषद्—वही

११२. योगराजोपनिषद्—उपनिषद्-संग्रह, मोतीलाल बनारसी दास-दिल्ली, सन् १९८०

११३. योगशिखोपनिषद्—योग-उपनिषदः, सम्पादक अ० महादेव शास्त्री, अड्यार, मद्रास-१९२०

११४. वराहोपनिषद्—वही

११५. शाण्डिल्योपनिषद्—वही

११६. हंसोपनिषद्—वही

117. Bhāskarī—Vol. I, A Commentary on the Iśvarapratyabhijñāvimarśini of Abhinava Gupta—Edited by K. A. Subramnia Iyer and Dr. K. C. Pandey, Allahabad—1983.

118. Haṭha-Yoga Pradipikā of Sh. Svātmārāma Svāmin, English Translation by Yogi Śrīnivāsa Iyangār, The Theosophical Publishing House, Adyar Madras, India. Third Edition – 1949.

119. Kāmakalāvilās of Puṇyā Nanda with Comm. Edited with Notes of Māhāmahopādhyaya Paṇdit Mukunda Rāma Shāstrī. Kashmir Series of Texts and Studies No. XII—1918.

120. Kāmakalāvilās by Puṇyānanda Natha with the Commentary of Natanānanda-Natha, Translated with commentary by Arthur Avalon (Sir John Woodroffe), Ganesh & Co. (Madras) Private Ltd. Madras-17, 1961

121. Parā Prāveshikā of Kṣhēmarāja—Edited with notes by Mahāmahopādhyaya Paṇdit Mukunda Rāma Shārtrī, Kashmir Series of Texts and Studies. No.—XU. 1918.

122. Pāśupata Sūtram : with Pañchārtha-Bhāṣya of Kauṇḍinya, Translated with an Introduction on the History of Śaivism in India. Sh. Haripada chakraborti. (1970) Academic Publishers – II Panchanan Ghosh Lane Calcutta.

123. Pāśupata Sūtras : with Pañchārtha-Bhāṣya of Kauṇḍinya, Edited by Sh. R. Anantha Krishna Shastri, Published

by—The Oriental Manuscripts Library of the University of Travancore. Trivandrum—1940.

124. Philosophy of Gorakhnath with Gorakshavachan Sangraha by Sh. Akshaya Kumar Benerjea, Published by—Mahant Dig Vijai Nath Trust, Gorakhnath Temple, Gorakhpur—1962.

125. Ṣaṭtriṁśattattva-Sandoha (A Text of Trika Philosophy of Kashmir) with the Commentary of Rājānaka Ānanda Kavi, Translated into English with explanatory notes and Introduction by—Dr. Debabrata Sen Sharma, B.N. Chakravarty, University, Kurukshetra—1977.

126. Siddhānta Bindu—A Commentary on the Daśaślokī of Śaṁkarācārya : Edited with an Original Commentary by Mahāmahopādhyaya Vasudev Shastri Abhyankar, 1928. Second Edition by MM. K. V. Abhyankar, Bhandarkar Oriental Research Institute, Poona-4, 1962.

127. Siddha-Siddhānta-Paddhati and other works of the Nāth Yogīs—by Smt. Kalyani Mallik. Poona Oriental book House, 330 A, Sadashiv Peth, Poona—First impression, 1954.

128. Sīva Svarodaya—Text with English Translation by Sh. Ram Kumar Rai—Prachya Prakashan, Varanasi. 1980.

129. Tantrā Loka of Abhinava Gupta with Comm. by Rājānaka Jayaratha—Edited with Notes by Pandit Madhusudan Kaul Shastri, Kashmir Series of Texts and Studies. No. XXIX—1921.

130. The Bṛhadāraṇyaka Upniṣad : with the Commentary of Śankarācārya, Translated by Swāmī Mādhavānanda. Published by Swami Yogeshwarananda Advaita Ashrama, Mayavati Almora, Himalayas—1950.

131 The Shiva Sūtra Vimarshinī being The Sūtras of Vasu Gupta with the Commentary called Vimarshinī by Kshemarāja—Kashmir Series of Texts and Studies Vol. I—1911.

132. The Siddhānta Ratna with Comm. of Baladeva Vidyābhūṣaṇa, Edited with Introduction Etc. by Sh. Gopinath Kaviraj –1927, Benares Saraswati Bhavana Texts No.(10).

133. The Spanda Sandoha of Kṣhēmarāja—Edited with Notes by Māhāmahopādhyaya Paṇdit Mukunda Rāma Shāstrī. Published under Sir Pratāp Singh Sāhib Bahādur—Jammu and Kashmir State—1917.

134. The Tantrā Loka of Abhinava Gupta : with Comm. by Rājānaka Jayaratha, Edited with notes by Mahāmahopādhyāya Pandit Mukunda Rām Shāstrī.
Printed at the Indian Press—1918.

135. Vedānta Darśanam—Vision of Vedānta—Sh. R. Karunakaran.
Sri Śankara Sanskrit Vidyapeetham, Edakkadom, Quilon, S. India—1980.

# अनुक्रमणिका

### आ

त

प

म

म

**य**

———

श्रीः

# सिद्धसिद्धान्तसंग्रहः

श्रीगणपतिचरणारविन्दाभ्यां नमः ।

यत् पादाब्जरजःस्पर्शादरजस्कं मनो भवेत् ।
स एव गुरुनाथो मे कृपासिन्धुः प्रसीदताम् ॥१॥

अर्था ये सिद्धसिद्धान्तपद्धतौ सुनिरूपिताः ।
संग्रहं तनुते तेषां कश्चिच्छ्रीकृष्णपुष्टये ॥२॥

पिण्डसम्भवविचारसंविदाधारतत्पररसैक्यभूमयः ।

तीक्ष्णधीभिरवधूत इत्ययं दर्शितः खलु निरूप्य संग्रहः॥३॥
कार्य्यकारणकर्तृत्वं यदा नास्ति कुलाकुलम् ।

अव्यक्तं परमं तत्वं स्वयं नाम तदा भवेत् ॥४॥

तस्यावस्थामात्रधर्माधर्मिणीति प्रसिद्धिभाक् ।
निजा शक्तिरभूत् तस्या औन्मुख्याद्भा परोत्थिता ॥५॥

ततः स्पन्दनमात्रा स्यादपरेति स्मृता ततः ।
सूक्ष्माहन्तार्धार्धमात्रा चिच्छिलाकुण्डलिन्यतः ॥६॥

निराकृतित्वान्नित्यत्वान्निरन्तरतया तथा ।
निष्पन्दत्वान्निरुत्थत्वान्निजाः पञ्च गुणाः स्मृताः ॥७॥

अस्तित्वमप्रमेयत्वमभिन्नत्वमनन्तता ।
अव्यक्ततेति पञ्च स्युः परायां सम्मता गुणाः ॥८॥

स्फुरत्ता स्फारतायुक्ता स्फुटता स्फोटता तथा ।
स्फूर्तिरेवं पञ्च गुणा अपरायामपि स्मृताः ॥९॥

निरन्तरत्वं नैरंश्यं नैश्चल्यं निश्चयत्वकम् ।
निर्विकल्पत्वमेव स्यात् सूक्ष्माया गुणपञ्चकम् ॥१०॥

पूर्णत्वं प्रतिबिम्बत्वं तथा प्रकृतिरूपता ।
प्रत्यङ्मुखत्वमौच्चल्यं पञ्चैते भोगिनां गुणाः ॥११॥

शक्तिपञ्चकसम्भूतपञ्चविंशतिसंश्रयात् ।
परपिण्डसमुत्पत्तिः सिद्धान्तज्ञैः समीरिता ॥१२॥

उक्तं च—

निजा पराऽपरा सूक्ष्मा कुण्डली तासु पञ्चधा ।
शक्तिचक्रक्रमेणैव जातः पिण्डः परः शिवे ॥१३॥

तत्रोऽस्तितापूर्वधर्मार्चिर्मात्रं स्यादपरं परम् ।
तत्स्वसंवेदनाभासमुत्पन्नं परमं पदम् ॥१४॥

स्वेच्छामात्रं ततः शून्यं सत्तामात्रं निरञ्जनम् ।
तस्मात्ततः स्वसाक्षाद्भूः परमात्मपदं मतम् ॥१५॥

अकलत्वासंशयत्वानुमतत्वान्यपारता ।
अमरत्वमिति प्रोक्ता गुणाः पञ्चापरे पदे ॥१६॥

निःकलत्वमलोलत्वमसंख्येयाक्षयत्वके ।
अभिन्नतेति पञ्चोक्ता गुणाः स्युः परमे पदे ॥१७॥

नीलता पूर्णता मूर्छा उन्मनी लयतेत्यमी ।
शून्ये पञ्च गुणाः प्रोक्ताः सिद्धसिद्धान्तवेदिभिः ॥१८॥

सहजत्वं सामरस्यं सत्यत्वं सावधानता ।
स्वर्गगत्वमिति प्रोक्ता गुणाः पञ्च निरञ्जने ॥१९॥

अभयत्वमभेद्यत्वमच्छेद्यत्वमनाश्यता ।
अशोष्यत्वमिति प्रोक्ता गुणाः पञ्च परात्मनि ॥२०॥

तत्त्वपञ्चकमाख्यातमाद्यपिण्डस्य पण्डितैः ।
एवं तथा गुणाः प्रोक्ताः पञ्चविंशतिसंख्यकाः ॥२१॥

सगुणैः समवेतैस्तैरादिपिण्डः समुद्भवेत् ।
आदेस्तु परमानन्दः प्रबोधः स्यात्ततस्ततः ॥२२॥

भवेच्चिदुदयस्तस्मात् प्रकाशः सोऽहमित्यतः ।
उदयः स्यात्तथोल्लासोऽवभासोऽथ विकाशनम् ॥२३॥

प्रभेति स्युर्गुणाः पञ्च प्रबोधस्य प्रकीर्त्तिताः ।
निष्पन्दहर्षाबुन्मादः स्पन्दो नित्यसुखं तथा ॥२४॥

इति पञ्च गुणाः प्रोक्ताः परमानन्दसंज्ञके ।
सद्भावोऽत्र विचारश्च कर्तृत्वं ज्ञातृता तथा ॥२५॥

स्वातन्त्र्यमिति पञ्चैव गुणाश्चिदुदयस्य च ।
निर्विकारत्वनैष्कल्ये सद्बोधः समता तथा ॥२६॥

विश्रान्तिरेवं संप्रोक्तं प्रकाशगुणपञ्चकम् ।
अहन्ता खण्डितैश्वर्य्यं स्वानुभूतिः समर्थता ॥२७॥

सर्वज्ञतेति पञ्चोक्ताः सोऽहम्भावगुणा इमे ।
इत्याद्यपिण्डः संपृक्तः तत्त्वपञ्चकगैर्गुणैः ॥२८॥

पञ्चविंशतिसंख्याकैरिमैरेव समुत्थितः ।
आद्यादभून्महाकाशं ततो जातो महानिलः ॥२९॥

तस्मात्तेजो महत्तस्मान्महत् कं तन् महा धरा ।
अवकाशं तथा छिद्रमस्पृश्यत्वं तथा रवः ॥३०॥

नीलवर्ण इति प्रोक्ता गुणाः पञ्च महाम्बरे ।
सञ्चारश्चालनं स्पन्दः शोषणं धूम्रवर्णता ॥३१॥

इमे पञ्च गुणाः प्रोक्ता महावायौ मनीषिभिः ।
दाहकत्वं पावकत्वं सूक्ष्मत्वं रूपभासिता ॥३२॥

रक्तवर्णत्वमेवं स्युः गुणाः पञ्च महानिले ।

प्रवाहाप्यायनरसद्रवाश्च श्वेतवर्णता ।
इमे पञ्च गुणाः प्रोक्ता महावारिणि पण्डितैः ॥३३॥

स्थूलत्वनानाकृतिते काठिन्यं गन्धपीतते ।
इति पञ्च गुणाः प्रोक्ता महामह्यां महर्षिभिः ॥३४॥

इति साकारपिण्डस्य तत्त्वपञ्चकमिष्यते ।
पञ्चविंशतिसंख्याका गुणास्तैर्मिलितैः शिवः ॥३५॥

शिवाद्भैरव एतस्माच्छ्रीकण्ठोऽतः सदाशिवः ।
ईश्वरोऽस्माद्रुद्र आसीत्ततो विष्णुस्ततो विधिः ॥३६॥

महासाकारपिण्डस्य मूर्त्यष्टकमिदं स्मृतम् ।
ब्रह्मणः प्राक्कृतं दृष्ट्वा नरनार्य्यात्मपिण्डकम् ॥३७॥

पञ्चपञ्चात्मकं तच्च शरीरमिदमुच्यते ।
अस्थित्वङ्मांसलोमानि नाड्यः पृथ्व्यंशका इमे ॥३८॥

लालामूत्रे असृक्स्वेदौ शुक्रमित्यंशका अपाम् ।
क्षुधातृषालस्यनिद्राकान्तयोंऽशा विभावसोः ॥३९॥

धावनं चलनं रोधः प्रसाराकुञ्चने तथा ।
वाय्वंशा उदिता एते पञ्च सिद्धान्तवेदिभिः ॥४०॥

रागद्वेषौ भयं लज्जा मोह एवं नभोगुणाः ॥
इति प्राकृतपिण्डे स्युः पञ्चभूतानि तद्गुणाः ॥४१॥

मनो बुद्धिरहङ्कारश्चित्तं चैतन्यमित्यथ ।
सिद्धसिद्धान्तगैरुक्तमन्तःकरणपञ्चकम् ॥४२॥

संकल्पश्च विकल्पश्च जडता मूर्छना तथा ।
मननं चेति संप्रोक्ता गुणाः स्युः पञ्च मानसाः ॥४३॥

विवेकवैराग्यपरा प्रशान्तिक्षमा गुणा बुद्धिगता भवन्ति ।
मानो ममत्वं सुखदुःखमोहा गुणा इमेहंकृतिवर्तिनःस्युः॥४४॥

मतिर्धृतिः संस्मृतिरुत्कृतिश्च स्वीकार इत्थं खलु पञ्च चैताः ।
चैतन्यनिष्ठास्तु विमर्षहर्षौ धैर्यं गुणाश्चिन्तननिःस्पृहत्वे ॥४५॥

अन्तःकरणधर्मा ये त एते संप्रदर्शिताः ।
सत्त्वं रजस्तमः कालो जीवश्च कुलपञ्चकम् ॥४६॥

दया धर्मः क्रिया भक्तिः श्रद्धेत्थं सत्त्वगा गुणाः ।
दानं भोगश्च शृङ्गारः स्वार्थादाने रजोगुणाः ॥४७॥

मोहप्रमादौ निद्रा च हिंसाक्रौर्ये तमोगुणाः ।
विवादः कलहः शोको बन्धो वञ्चनमेव च ॥४८॥

एवं पञ्च गुणाः प्रोक्ताः कालस्य मुनिपुङ्गवैः ।
जाग्रत्स्वप्नसुषुप्तितुर्य्यकतुरीयाऽतीतसंज्ञा गुणाः ॥४९॥

जीवस्था इह कीर्तिता इति भवेज्जीवेऽपि तत्पञ्चकम् ।
इच्छा कर्म विमोहिनी प्रकृतियुक् वाक् चेति पञ्चाऽपि ते ॥५०॥

व्यक्ताख्याधरशक्तिपञ्चकगुणाः सन्तीति सिद्धान्तवाक् ।
उन्मेषो वासना वीप्सा चिन्ता चेष्टेच्छिका गुणाः ॥५१॥

स्मृत्युद्यमोद्वेगकार्य्यनिश्चयकारिणी क्रिया ॥
मदमात्सर्यकपटकर्त्तव्यासत्यसंज्ञकाः ॥५२॥

प्राकृता मायिका आशा तृष्णा काङ्क्षा स्पृहा मृषा ।
परास्ति पश्यन्त्यथ मध्यमा च वैखर्य्यपीष्टाक्षरमातृका च ।
एते गुणा वाचि भवन्ति पञ्च प्रपञ्चनिर्मुक्तजनोपदिष्टाः ॥५३॥

पञ्चविंशतिरेते स्युर्व्यक्तिशक्तिगुणा इह ।
कालकर्माग्निचन्द्रार्काः प्रत्यक्षकृतिहेतवः ॥५४॥

इति प्रीतिलीलातुरत्वाभिलाषा
गुणाः पञ्च कामे वसन्तीत्यणन्ति ।
शुभं चाशुभं कीर्त्यकीर्त्ती तथेच्छा-
गताः कर्मणि ब्रह्मनिष्ठास्तथा ते ॥५५॥

उल्लोलकल्लोलसमुच्चलत्त्वप्रोन्मादवत्यूर्मिविशेषवत्यः ।
विलेपयन्ती लहरीविलोला विलेलिहासप्रसरा प्रवृत्तिः ॥५६॥

स्रवन्तिका नामवती प्रवाहा सौम्या प्रसन्नेति कलाः सुधांशोः ।
उदीरिता षोडश तस्य चान्या न वृत्तिसंज्ञामृतनाम तस्याः ॥५७॥

तपिनी ग्रासिनी क्रूरा क्रुञ्चनी शोषणी तथा ।
बोधिनी घस्मरार्काषिण्यर्थसन्तुष्टिवर्द्धिनी ॥५८॥

ऊर्मिरेखाकिरणिनी प्रभावत्यंशुमालिनः ।
इमा कला द्वादश स्युरन्याप्यस्ति प्रकाशिका ॥५९॥

बीजिनी दीपिका ज्वाला विस्फुलिङ्गा प्रचण्डिका ।
पाचिका रौद्रिका दाहा रोचिनी शोषिणीति ताः ॥६०॥

कला दश भवन्त्यग्नेर्ज्योतिर्निजकला परा ।
इति प्रत्यक्षकारिणो गुणाः स्युः सिद्धसम्मताः ॥६१॥

द्वाराणि द्वादशोक्तानि नाडीनां यानि तान्यथ ।
दर्श्यन्ते सिद्धसिद्धान्तनिर्णीतानि यथामतम् ॥६२॥

इडापिङ्गले नासिकारन्ध्रगे द्व
सुषुम्णा भवेत्तालुमूलेजरन्ध्रम् ।
समे तावधीकृत्य गान्धारिकाख्या
तथा हस्तिजिह्वा श्रवोयुग्मके स्यात् ॥६३॥

भवेच्छङ्खिनी लिङ्गवक्त्रादिदण्डा-
ध्वनापद्मजद्वारमाप्ताथ पूषा ।
तथालम्बुषा चक्षुषोः सन्तगास्या-
ग्रगा स्यात्पयस्विन्यपाने कुहूश्च ॥६४॥

दश नाड्यो दशद्वारवर्त्तिन्य इति कीर्त्तिताः ।
द्वासप्ततिसहस्राणि नाड्योऽन्या रोमकूपगाः ॥६५॥

हृदि प्राणो गुदेऽपानो नाभिगामी समानकः ।
उदानः कण्ठनिलयो व्यानस्तालुसमाश्रयः ॥६६॥

सर्वाङ्गव्यापको नागः कूर्मोऽक्षिण कृकलो नसि।
देवदत्तो मुखाग्रस्थः कण्ठाधः स्याद्धनञ्जयः ॥६७॥

आहाराकाङ्क्षकः पूर्वो द्वितीयः स्तम्भकुम्भकः।
तृतीये दीपनं पाकस्तुर्ये नाड़ीविशोधनम् ॥६८॥

आप्यायनं रुचिश्चैव पञ्चमेऽशनजल्पने।
मोडनोच्चाटने षष्ठे मेषोन्मेषौ च सप्तमे ॥७६॥

क्षुदुद्गारावष्टमे स्तां जृम्भणं नवमे भवेत्।
दशमे नादघोषौ तु स्युरेते दश वायवः ॥७०॥

अवलोकनपिण्डस्य समुत्पत्तिरितीरिता।
नरनारीरूपमाहुरिदमेव मुनीश्वराः ॥७१॥

गर्भपिण्डसमुत्पत्तिमथ वक्ष्यामि सम्मताम्।
ऋतौ स्त्रीतरयोर्योगे जीवो बिन्दुरजाश्रयात् ॥७२॥

पूर्वस्मिन् कलिलं ततो रविदिनैः स्याद् बुद्बुदाभं ततः।
पक्षाद्गोलकसन्निभं कठिनताभाङ्मासमात्राद्भवेत् ॥
तद्द्वन्द्वेन शिरस्त्रिभिः करपदाद्यं स्याच्चतुर्भिः श्रुती।
नेत्रे घ्राणगुदास्यमेढ्रकमथो पृष्ठोदरं पञ्चभिः ॥७३॥

षड्भिर्गात्ररुहाणि सप्तभिरथो स्याच्चेतनालक्षणा-
न्यष्टाभिर्यदि जायते सुविरहस्तत्तत्त्वलाभस्ततः ॥
मासेज्ञो दशमेऽथ योनिसमयाच्छुक्राधिकत्वे पुमान्।
शुक्रस्याधिकतान्वये तु वनिता साम्ये तयोः क्लीबकः ॥७४॥

अन्योन्यचित्तप्रतिकूलभावात्
स्त्रीपुंसयोर्वामनकुब्जखञ्जाः।
अन्धादयोङ्गाविनिपीडना स्या-
द्रेतोविभावात्सुतयुग्मता च ॥७५॥

शुक्रं सार्द्धपलत्रयं निगदितं रक्तं पलाविंशतिः।
तस्यार्द्धं खलु मेदसोरविपला मज्जा शतं मांसकम् ॥

पित्तं रावणवक्त्रसम्मितपलं षड्युत्तरा स्याच्छत-
त्रय्यस्थामथ सन्धयस्तदुपमाः सार्द्धत्रिकोटचः कचाः ॥७६॥

मज्जास्थिमेदांसि सशुक्रकारिण
भवन्ति वीर्य्याज्जनकस्य पुत्रे ।
मांसासृजी गात्ररुहारिण वातः
पित्तं कफस्तद्द्वययोगतः स्यात् ॥७७॥

दशधातुमयो देह इत्थं भवति निश्चितः ।
गर्भपिण्डोत्पत्तिरेवं सिद्धसिद्धान्तसम्मता ॥७८॥

इति सिद्धसिद्धान्तसङ्ग्रहे षड्विधपिण्डोत्पत्तिः प्रथमोपदेशः ॥

# द्वितीयोपदेशः

नव चक्राणि देहेस्मिन् भवन्तीति विनिश्चितम् ।
तेषां विभागो ज्ञातव्य आधारादिक्रमादथ ॥१॥

ब्रह्मचक्रं त्रिधावर्तं भगमण्डलकाकृति ।
आधारे तदधः कन्दे ध्यायेच्छक्तिं हुताशभाम् ॥२॥

कामरूपाभिधं पीठं सर्वकामप्रदायि तत् ।
तदत्र भवतीत्युक्तं सिद्धसिद्धान्तवेदिभिः ॥३॥

स्वाधिष्ठानाभिधं चक्रं द्वितीयं यच्चतुर्दलम् ।
पद्मं तत्र प्रवालाभं लिङ्गं ध्यायेत् पराङ्मुखम् ॥४॥

तत्रैवोड्यानपीठं स्याज्जगदाकर्षसिद्धिदम् ।
भवतीति महासिद्धाः सिद्धान्तं चक्रिरे पुरा ॥५॥

तृतीये नाभिचक्रे तु पञ्चावर्तादिसन्निभे ।
ध्यायेत् कुण्डलिकाकारे बालार्कद्युतिकुण्डलीम् ॥६॥

तुर्यं हृदयचक्रं यत्तत्राष्टदलवारिजे ।
लिङ्गं ध्यायेत् कर्णिकान्तर्ज्योतिर्मत्परमोज्ज्वलम् ॥७॥

सैव हंसकला ख्याता सर्वेन्द्रियवशङ्करी ।
योगिभिर्विधिवद् ज्ञाता सर्वलोकान् वशं नयेत् ॥८॥

पञ्चमं कण्ठचक्रं तु चतुरङ्गुलबिन्दुभम् ।
तद्वामदक्षचन्द्रार्कनाडचोर्ध्यायेत् सुषुम्णिकाम् ॥९॥

अनाहतकला सैव विख्याता योगिनां मते ।
अनाहतमहासिद्धिविश्राणनधुरन्धरा ॥१०॥

तालुचक्रं षष्ठमत्र सुधाधाराप्रवाहभृत् ।
घण्टिका राजदन्तान्तर्ध्यायेत् शून्यं मनोलये ॥११॥

नवमं ब्रह्मचक्रं यत्सहस्रदलवारिजम् ।
ध्यायेद्गोक्षीरभं तत्र हंसं तत्तन्मयो भवेत् ॥१२॥

नवचक्रविचारोऽयं कथितः परमार्थदः ।
अथाहं षोडशाधारान् वक्ष्यामि कृपया गुरोः ॥१३॥

पादाङ्गुष्ठात्परं ध्यायेत्तेजस्वत्प्रथमं यदि ।
दृष्टिः स्थैर्य्यं समायाति नैरन्तर्य्येण निर्मला ॥१४॥

मूलसूत्रं समालम्ब्य स्थातव्यं पादपार्ष्णिना ।
यदा तदानीमाधारो द्वितीयोऽग्निप्रदीपनः ॥१५॥

विकाससङ्कोचनतो गुदमाकुञ्चयेद्यदा ।
तृतीयाधार उक्तस्तदपानस्थैर्य्यकारकः ॥१६॥

सङ्कोचनेन मणिकस्य परत्र तुर्य्ये
दण्डाध्वनैव चरमेण निवेश्य चित्तम् ।
वज्रोदरे सगतिबन्धनभेदिदर्प्यां
भृङ्गस्य चेद्दृढिदरे (?)खलु बिन्दुबन्धः ॥१७॥

एषा वज्रोलिका प्रोक्ता सिद्धसिद्धान्तवेदिभिः ।
ज्ञानादेव भवेदस्याः सिद्धमार्गः प्रकाशितः ॥१८॥

नाड्याधारे पञ्चमे तु सन्निवेश्य मनोनिलम् ।
जारणं भवति क्षिप्रं योगिनां मलमूत्रयोः ॥१९॥

नाभ्याधारे तथा षष्ठे प्रणवोच्चारणक्रियाम् ।
कृत्वैकाग्रेण मनसा नादोदयमुपैत्यलम् ॥२०॥

सप्तमे हृदयाधारे प्राणवायुं निरोधयेत् ।
यदा तदैवाम्बुरुहं विकासमधिगच्छति ॥२१॥

कण्ठाधारेऽष्टमे कण्ठं चिबुकेन निपीडयेत् ।
इडापिङ्गलयोर्वायुस्थैर्य्यभावस्तदा भवेत् ॥२२॥

नवमे घण्टिकाधारे जिह्वां सङ्घट्टयेत् क्रमात् ।
सुधाकलापरिस्त्रावस्तदा स्यादमरत्वदः ॥२३॥

जिह्वां चालनदोहाभ्यां दीर्घीकृत्य निवेशयेत् ।
दशमाधारतालवन्तः काष्ठा भवति सा परा ॥२४॥

एकादशे रसाधारे जिह्वाग्रमथनात्स्फुटम् ।
परमानन्दसन्दोहकारिणी कविता भवेत् ॥२५॥

द्वादशोर्द्धरदाधारे जिह्वाग्रं ग्रन्थयेद् दृढम् ।
व्याधयः क्षणमात्रेण परिक्षीणा भवन्त्यलम् ॥२६॥

त्रयोदशो नासिकाख्य आधारो यः प्रकीर्तितः ।
तदग्रं लक्षयेन्नित्यं मनो भवति सुस्थिरम् ॥२७॥

कपाटाकारमाहुर्यन्नासामूलं चतुर्दशम् ।
तत्र दृष्टिनिबन्धेन षण्मासाज्ज्योतिरीक्षणम् ॥२८॥

भ्रुवाधारं पञ्चदशं पश्येच्चेदूर्ध्वचक्षुषा।
पुरोऽवलोकयेच्छ्रीमान् किरणाकारमुज्ज्वलम् ॥२६॥

षोडशं नयनाधारमूर्द्धभागे प्रचालयेत् ।
अङ्गुल्या चेदपाङ्गे स्वे ज्योतिःपुञ्जं प्रपश्यति ॥३०॥

सदा कृन्तनमेवाऽथ लोकयेन्निर्मलाशयः ।
इत्युक्ताः षोडशाऽऽधारा लक्ष्यत्रयमथोच्यते ॥३१॥

मूलकन्दाद्दण्डलग्नां ब्रह्मनाडीं सितप्रभाम् ।
ब्रह्मरन्ध्रावधि ध्यायेत् तन्मध्ये विद्युदुज्ज्वलाम् ॥३२॥

मूर्ति तां लक्षयेन्नित्यं बिसतन्तुतनीयसीम् ।
सर्वसिद्धिप्रदाने सा कल्पवल्लीयते सताम् ॥३३॥

ललाटोर्ध्वेऽथवा ताराकारं गुह्याटमण्डलम् ।
लक्षयेद्वालिकुहरे रक्तं मधुकराकृतिम् ॥३४॥

तर्ज्जनीमुखनिरुद्धकर्णको योऽथवा भवति पूरुषोत्तमः ।
मूर्द्धमध्यगर्तसिहहाटके तस्य नाद उदयेत घुंध्विति ॥३५॥

चक्षुर्मध्ये पुत्तलीसन्निभं वा
नीलज्योतीरूपमुद्यत् प्रकाशम् ॥
नैरन्तर्य्याल्लक्षयेदेतदुक्तं
प्राज्ञैरन्तर्लक्ष्यमलब्धचित्तैः ॥३६॥

एकाङ्गुलचतुर्मार्गे नासाग्राद्बहिरम्बरम् ।
श्यामलज्योतिरुपमं नैरन्तर्य्येण लक्षयेत् ॥३७॥

नासाग्रतो बहिर्व्यापि सततं द्वादशाङ्गुले ।
लक्षयेद्धरितालाभं पुरः पार्थिवमण्डलम् ॥३८॥

वायुतत्त्वं धूम्रवर्णं नासाग्रात् षोडशाङ्गुलम् ।
लक्षयेत्तन्मुखं वा खं स्थिरदृग्गोकुलेक्षणे ॥३९॥

इति सिद्धसिद्धान्तसङ्ग्रहे निर्मलीकरणम् ॥

ऊर्द्धदृष्ट्यान्तरालम्बे लक्षयेत्सिद्धवर्त्मगः ।
ज्योतिर्मयूखा दृश्यन्ते तदाऽकस्मादितस्ततः ॥४०॥

अथवा यत्र कुत्रापि व्योमैव परिलक्षयेत् ।
आलम्बते स्थिरत्वं दृक् योगिनोऽभ्यासतः सदा ॥४१॥

द्वादशाङ्गुलमारभ्याष्टादशाङ्गुलकावधि ।
शिरस्यूर्द्धेऽथवा पश्येज्ज्योतिःपुञ्जं विमुक्तिदम् ॥४२॥

दृष्ट्यग्रे तप्तभर्माभां लक्षयेद्वा वसुन्धराम् ।
दृष्टिः स्थिरत्वमेतीति बहिर्लक्ष्यमनेकधा ॥४३॥

सितं पीतं रक्तं हरितमथवा श्यामलनिभं
प्रदीपाकारं वाधिगततुलनं धूमशिखया ।
स्फुरज्ज्योतीरूपं हिमकिरणबिम्बाकृति तथा
दिनेशाकारं वा नवयवकमीक्षेत मनसा ॥४४॥

मध्यलक्ष्यमिदं प्रोक्तमिति लक्ष्यत्रयोरिता ।
सिद्धसिद्धान्तविज्ञातं व्योमपञ्चकमुच्यते ॥४५॥

बाह्याभ्यन्तरदेशमुज्ज्वलतमं शून्यं खमालोकयेत्
ध्वान्ताकारधरं परं खमथवा कल्पान्तकालाग्निभम् ।
आहोस्विद् गमनं महत्पदमुत प्रद्योतरूपं नभ-
स्तत्त्वाद्यं दिनरत्नकोटिरुचि वा सूर्य्याम्बरं सन्ततम् ॥४६॥

व्योमपञ्चकविलोकनात् पुमान् जायते कुलिशतुल्यविग्रहः ।
इत्यवेत्य विमलेन चेतसा व्योमपञ्चकमिदं प्रपञ्चितम् ॥४७॥

नवाङ्गं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम् ।
समानं यो न जानाति स योगी नामधारकः ॥४८॥

इति प्राचीनोक्तिः ॥

योगाङ्गानि भवन्त्यष्टौ यमो नियम आसनम् ।
प्राणायामस्तथा प्रत्याहारः स्यादथ धारणा ॥४९॥

ध्यानं समाधिरेतेषां पृथगर्थानथ ब्रुवे ।
द्वन्द्वदुःखादिसहनं यम इत्यभिधीयते ॥५०॥

वृत्तीनां मानसीनां हि यैः स्यान्नियमनं स्फुटम् ।
नियमास्ते प्रकीर्त्यन्ते सन्तोषप्रमुखा बुधैः ॥५१॥

स्वस्वरूपे सदासन्नभाव आसनमुच्यते ।
सुखस्वस्थाम्बुजादीनां भेदात्तद् बहुधा मतम् ॥५२॥

प्राणानां स्थैर्यहेतुर्यः स प्राणायाम इष्यते ।
निःश्वासतारे चक्राद्यैः सम्पुटीकरणं यथा ॥५३॥

चेतोवृत्तितरङ्गाणां विषयेभ्यो निवर्तनम् ।
प्रत्याहारः स उत्पन्नो विकारग्रासकारकः ॥५४॥

उत्पन्नोत्पन्नवृत्तीनां निर्विकारे हि धारणम् ।
धारणेति समाख्याता नियम्यैकाऽवधारणा ॥५५॥

परमात्माऽस्ति निर्द्वन्द्वः स्वात्मारामोऽत्र यद्भवेत् ।
यत्तत्स्वरूपमित्यन्तर्वृत्तिर्ध्यानमिति स्मृतम् ॥५६॥

सर्वतत्त्वसमावस्था समाधिरिति कीर्तितः ।
निरुद्यमत्वानायासावेकशीलैकभावते ॥५७॥

निर्विकल्पत्वमेते ते सन्ति भेदाः समाधिजाः ।
अष्टाङ्गयोग इत्येष निरूपित इह स्फुटम् ॥५८॥

इति सिद्धसिद्धान्तसङ्ग्रहे पिण्डविचारे द्वितीयोपदेशः ॥

——:०:— —

# अथ तृतीयोपदेशः

पिण्डसम्वित्तिरधुना कथ्यते योगिसम्मता ।
यस्याः समाश्रयाद् भाति तत्त्वज्ञानमदूरतः ॥१॥
ब्रह्माण्डवर्त्ति यत्किञ्चित्तत्पिण्डेऽप्यस्ति सर्वथा ।
इति निश्चय एवात्र पिण्डसम्वित्तिरुच्यते ॥२॥

कूर्मः पादतलेऽङ्गुष्ठतले पातालमुच्यते ।
तलातलं पुरोऽङ्गुष्ठात्पादपृष्ठे महातलम् ॥३॥

गुल्फे रसातलं प्रोक्तं जङ्घायां सुतलं मतम् ।
वितलं जानुदेशे स्यादतलं मूल इष्यते ॥४॥

ऊद्र्ध्वः स्वभावो यः पिण्डे स स्यात्कालाग्निरुद्रकः ।
पातालपदवाच्यानां सत्त्वानामधिदेवता ॥५॥

भूरादिलोकत्रितयं गुह्ये लिङ्गाग्रमूलयोः ।
तत्राधिदेवता शक्रः पिण्डेऽथत(?)विनायकः ॥६॥

वण्डाग्रे दण्डकुहरे महर्लोको जनस्तथा ।
तपो दण्डतले सत्यं मूले योमान(?)एतदीट् ॥७॥

अनेकव्यापकः पिण्डे धर्मोऽयमहसो(?)च्युतः ।
स्वर्लोकभूतकुक्षेः स देवतात्वेन सम्मतः ॥८॥

हृदये रुद्रलोकोऽस्ति रुद्रस्तत्राधिदेवता ।
उग्रः स्वमावो यः पिण्डे तत्स्वरूपः स सम्मतः ॥९॥
वक्षसोऽश्वरलोकोऽस्ति तत्राधीश्वर ईश्वरः ।
पिण्डे तृप्तिस्वरूपेण तिष्ठतीति मतं सताम् ॥१०॥

कण्ठं सदाशिवनिवासमुदाहरन्ति
तत्राधिनायकतया स सदाशिवोऽस्ति ।
पिण्डे जितेन्द्रियगणैरनुभूयमानः
सौम्यस्वभाव इति यः प्रथितप्रतिष्ठः ॥११॥

श्रीकण्ठलोकः खलु कण्ठमध्ये श्रीकण्ठ एवात्र भवेदधीशः ।
सनातनत्वात्मकतां दधानः पिण्डान्तरे वाविकृताधिवासः ॥

लम्बिकामूलके भैरवोऽधीश्वर-
स्तत्र यत्कीर्त्तितस्तस्य लोको बुधैः ।
प्राणिनां सर्वदा सर्वकार्य्योद्यमो
भैरवाख्याधरः पिण्डमध्ये मतः ॥१३॥

तालुद्वारे शैवलोकः प्रसिद्धः
तत्राधीशः स्याच्छिवो विश्वबन्द्यः ।
विद्वद्वर्य्यैर्योगशान्तिः प्रतीता
तद्रूपोऽसौ पिण्डमध्ये विभाति ॥१४॥

तालोरभ्यन्तरे भाति सिद्धलोकोऽत्र देवता ।
महासिद्धः प्रबोधात्मा पिण्डमध्येऽनुभूयते ॥१५॥

ललाटेऽनादिलोकोऽस्ति तत्रानादिरधीश्वरः ।
पराहन्तास्वरूपेण पिण्डमध्येऽवतिष्ठते ॥१६॥

शृङ्गाटे कुललोकोऽस्ति तत्र देवः कुलेश्वरः ।
पिण्डमध्ये सदानन्दस्वरूपेणावतिष्ठते ॥१७॥

ब्रह्मरन्ध्रे परब्रह्मलोकस्तत्राधिदेवता ।
परब्रह्माभिधा पिण्डे परिपूर्णस्वरूपतः ॥१८॥

परापरस्य लोकोऽस्ति तत्र देवः परेश्वरः ।
अस्तित्वरूपतः सोऽयं पिण्डमध्येऽनुभूयते ॥१९॥

त्रिकूटे शक्तिलोकोऽस्ति परा शक्तिस्तु देवता ।
सर्वकर्तृत्वसामर्थ्यपरावस्थात्मता तनौ ॥२०॥

पिण्डे सप्ततलानि स्युर्लोकाश्चात्रैकविंशतिः ।
वृत्ते विप्रो नृपः शौर्य्ये उद्यमे विड् भयेङ्घ्रिजः ॥२१॥

स्युर्जम्बूशाल्मलीप्लक्षकुशक्रौञ्चकगोमयाः ।
श्वेतोमज्जास्थिनाडीषु मांसे त्वचि कचे नखे ॥२२॥

मूत्रं शुक्रं कफो मेदो वसा प्रस्वेदरेतसी ।
क्षारेक्षुदधिसर्पींषि मधुवारिपयांसि च ॥२३॥

नवसु द्वारदेशेषु नवखण्डान्यकीर्त्तयन् ।
अथ शैलादिकान् ब्रूमो यथाभागमवस्थितान् ॥२४॥

मेरुदण्डे मेरुरस्ति कैलासो ब्रह्मशङ्खके ।
पृष्ठे हिमाद्रिर्मलयो वामेंऽशे मन्दरः परः ॥२५॥

विन्ध्याद्रिर्दक्षिणे कर्णे वामे मैनाकपर्वतः ।
श्रीपर्वतो ललाटे स्यादेवमष्टौ कुलाचलाः ॥२६॥

चतुःषष्टिर्मता वर्णा योगिन्यः सकलास्तथा ।
हस्ताङ्गुलिषु राजन्ते सर्व एवोपपर्वताः ॥२७॥

गङ्गा सरयूर्यमुना चन्द्रभागा सरस्वती ।
वितस्ता शतरुद्रा च नर्मदैरावती शिराः ॥२८॥

द्वासप्ततिसहस्राणि नद्यो याः परिकीर्तिताः ।
अन्या नद्युपनद्याद्यास्ता ज्ञेयास्तत्त्वदर्शिभिः ॥२९॥

नक्षत्रराशिग्रहतारकाणि तथा तिथीनां वलयेऽत्र कोष्ठाः ।
द्वासप्ततिर्ये विलसन्ति तेषु निवासमाहुः श्रुतितत्त्वविज्ञाः
॥३०॥

अनेकतारानेत्रान्तस्तेजःपुञ्जे कृताश्रयाः ।
त्रयस्त्रिंशत्कोटिदेवा रोमकूपसमाश्रयाः ॥३१॥

अनेकमुनिसङ्घाताः कक्षरोमकृताश्रयाः
पीठोपपीठा येऽनेके श्मश्रुस्थाने वसन्ति हि ॥३२॥

भूतप्रेतपिशाचराक्षसगणा दैत्यास्तथा दानवाः
सर्वे कीकसमन्धिसङ्गतिकराः सन्तीति सिद्धोदितम् ।

नागा अक्षितनूरुहेषु सकला ये तूपनागा मताः
तेषामस्ति निवासभूमिरुदरप्रोद्भूतरोमोद्गमे ॥३३॥

नानाविधेष्ववयवेषु वसन्ति चान्ये
गन्धर्वकिन्नरगणाप्सरसोऽथ यक्षाः ।
याः स्युः परा इह सदा खलु देवताश्च
वाच्येषु रश्मिविततेषु समुल्लसन्ति ॥३४॥

खेचर्य्यो मातरश्चान्या डाकिन्याद्युग्रदेवताः ।
वायुवेगे वसन्त्यत्र जलदा अश्रुपातगाः ॥३५॥

मर्मस्थानेष्वनेकेषां तीर्थानामस्ति संश्रयः ।
मतिप्रकाशेष्वावासः सिद्धानामपि कीर्तितः ॥३६॥

सूर्य्यचन्द्रमसोर्वासो नेत्रद्वय उदीरितः ।
लतागुल्मतृणादीनां जङ्घारोमसु संश्रयः ॥३७॥

कृमिकीटपतङ्गाद्याः पुरीषे कृतसंश्रयाः ।
यत्सुखं स भवेत्स्वर्गो यद्दुःखं नरकं हि तत् ॥३८॥

निर्विकल्पो भवेन्मोक्षो निद्रादौ जागरोत्तरम् ।
स्वस्वरूपदशेत्युक्तं पिण्डसंवित्तिहेतवे ॥३९॥

अखण्डपरिपूर्णात्मा विश्वरूपो महेश्वरः ।
घटे घटे चित्प्रकाशस्तिष्ठतीति प्रबुध्यताम् ॥४०॥

॥ इति पिण्डसंवित्तिस्तृतीयोपदेशः ॥

# अथ चतुर्थोपदेशः

पिण्डाधारमथो वक्ष्ये यज्ज्ञानादात्मतत्त्ववित् ।
पिण्डाधारो भवेच्छक्तिः चित्प्रबुद्धाऽपरम्परा ॥१॥

कार्यकारणकर्तॄणामुत्था(?)वस्थाकरं स्फुटम् ।
कर्त्तुं शक्नोति यत्तस्माच्छक्तिरित्यभिधीयते ॥२॥

नानासूत्रस्वरूपेण पटे तन्तुर्यथाश्रयः ।
तद्वदाधारतां सेति देहे नानांशुभिर्जडे ॥३॥

अत्यन्तस्वप्रकाशैकवेद्याभावैकसाङ्ख्यभूः ।
प्रत्यक्षसाक्षिणी या तां भावयेदपरम्पराम् ॥४॥

सहजेनात्मलीना सा यदा सञ्जायते तदा ।
निरुत्थानदशेत्युक्ता शिवसंज्ञापि तत्र हि ॥५॥

कुलाकुलस्वरूपाऽसौ सामरस्यस्वभूमिका ।
सत्ताहन्ता परा भासा स्फुरत्ता च कुलाकुलम् ॥६॥

परस्परनिराभासभासि सम्यक् प्रकाशिका ।
पराभासैकमेवास्तीत्येका सत्ता निरुच्यते ॥७॥

अनादिनिधना मेयस्वभावांशुसुखाऽस्म्यहम् ।
इत्यहन्ताज्ञानदशा स्फुरणात्मा स्फुरन्तिका ॥८॥

शुद्धबुद्धस्वरूपस्य कलयत्यात्मवित्पदम् ॥
यतस्ततः कलेत्युक्ता कुलपञ्चकमस्त्यदः ॥९॥

वर्णगोत्रादिराहित्यादेकमेवाकुलं मतम् ।
उमामहेशसम्वादादर्थोऽयमवगम्यताम् ॥१०॥

तथा च—

अनन्यत्वादखण्डत्वादद्वयत्वादनाशनात् ।
निर्धर्मत्वादनङ्गत्वादकुलं स्यान्निरन्तरम् ॥११॥

कुलस्य सामरस्येति सृष्टिहेतुः प्रकाशभूः ।
सा चापरम्परा शक्तिराज्ञेशस्यापरं कुलम् ॥१२॥

प्रपञ्चस्य समस्तस्य जाग्रद्रूपप्रवर्त्तनात् ।
एकैव कर्त्तुं यच्छक्ता तस्मादाज्ञेचरीह सा ॥१३॥

उक्तं ललितस्वच्छन्देन—

अकुलं कुलमाधत्ते कुलाद्व्यवहृतिर्भवेत् ।
अतः कुलाकुलस्थित्यानीश ईशोपि शङ्क्यते ॥१४॥

अलुप्तशक्तिमान्नित्यस्सर्वाकारतया स्वयम् ।
प्रस्फुरन्तं पुनः स्वेन स्वयमेकं प्रपश्यति ॥१५॥

शिवोऽपि शक्तिरहितः कर्त्तुं शक्तो न किञ्चन ।
शिवः स्वशक्तिसहितो ह्यभासाद्भासको भवेत् ॥१६॥

शक्तितत्त्वानन्दनित्यशक्तिमान् परमेश्वरः ।
सम्विद्रूपोऽस्ति विषय इति सिद्धिमतं सताम् ॥१७॥

परम्परास्वरूपा सा पिण्डाधारतया श्रुता ।
भवेत्कुण्डलिनी यद्वत् पिण्डसंसिद्धिकारिणी ॥१८॥

बुद्धाऽबुद्धा द्विधा प्रोक्ता द्वितीया चेतनात्मिका ।
नानाविचित्रक्रियोद्योगप्रपञ्चमयविग्रहा ॥१९॥

सर्पकुण्डलिनीभावाल्लोके कुण्डलिनी मता ।
पूर्वास्तविकृतेः पुंसो निवृत्युद्यमरूपिणी ॥२०॥

ऊर्ध्वगामित्वमेतस्यामूर्ध्वाकुञ्चनतो भवेत् ।
तदप्याकुञ्चनं मूलाधारबन्धेन सिद्ध्यति ॥२१॥

चिदचिद्रूपमेतद्यज्जगद्भवति सन्ततम् ।
मूलाधारकसंवित्तिप्रसरत्वेन तन्मतम् ॥२२॥

मूलाधारादिसकलचक्रेषु नव शक्तयः ।
नाथेन यदपि प्रोक्तास्तथाप्येकास्ति तत्र सा ॥२३॥

शक्तिप्रसरसङ्कोचौ जगतः सृष्टिसंहृती ।
भवतो नात्र सन्देहस्तस्मात्तन्मूलमुच्यते ॥२४॥

मलाधारे प्रबुद्धे तु सिद्धिर्भवति योगिनाम् ।
नियतोपाधिजीवात्मा वृथा भ्रान्तिरपि स्वयम् ॥२५॥

मध्ये स्वरूपतापन्नो यया सा मध्यकुण्डली ।
सूक्ष्मासूक्ष्मस्वरूपेण द्विविधा सा प्रतीयते ॥२६॥

निश्चला निश्चलग्राह्या स्थूलान्या ध्यानरूपिणी ।
अर्थान्तरपरिभ्रान्तिहेतुः सर्वस्वरूपिणी ॥२७॥

सर्वत्रास्तीति साकारा मध्यशक्तिः प्रकीर्तिता ।
सैव प्रसरसङ्कोचात्पर्य्यावृत्तिमुपागता ॥२८॥

नित्यानन्दतया लोला सूक्ष्माख्या तिमिराकृतिः ।
बुद्धेति सिद्धास्तामाहुः प्रसिद्धाः सिद्धवर्त्मनि ॥२९॥

तत्त्वसारेऽयमेवार्थो निरूपणपदे कृतः ।
यथा—
सृष्टिस्तु कुण्डली ख्याता सर्वभावगता हि सा ॥३०॥

बहुधा स्थूलरूपा च लोकानां प्रत्ययात्मिका ।
अपरा सर्वगा सूक्ष्मा व्याप्तिव्यापकवर्जिता ॥३१॥

तस्या भेदं न जानाति मोहितः प्रत्ययेन तु ।
ततः सूक्ष्मा परा संविन्मध्यशक्तिर्महेश्वरी ॥३२॥
स्वस्वरूपदशायां सा बोधनीया गुरुश्रिता ।
प्रबोधनात्पिण्डसिद्धिस्तस्या भवति योगिनाम् ॥३३॥

ऊर्ध्वशक्तिनिपातोऽथ मुमुक्षूणां कृतेष्यते ।
सर्वतत्त्वोद्र्ध्ववृत्तित्वान्निर्नाम परमं पदम् ॥३४॥
तत्त्वसम्वेदसाक्षाद्भूः पिशुनोक्तोद्र्ध्वशक्तिका ।

निपातः स्वरवरूपे नित्यथा(?) निरसनं मतम् ॥३५॥
निरुत्थाने स्वस्वरूपाखण्डैव प्रतिभाति सा ॥३६॥

उक्तञ्च—
शिवस्याभ्यन्तरे शक्तिः शक्तेरभ्यन्तरे शिवः।
अन्तरं नैव पश्यामि चन्द्रचन्द्रिकयोरिव ॥३७॥

नानाशक्तिस्वरूपेण सर्वपिण्डाश्रयत्वतः।
पिण्डाधार इतीष्टाख्या सिद्धान्त इति धीमताम् ॥३८॥

अत्र सङ्ग्रहश्लोकः—

सत्त्वे सत्त्वे सकलरचनासंविदेका विभाति
तत्त्वे तत्त्वे परमरचना संविदेका विभाति।
ग्रासे ग्रासे बहलतरला लम्पटा संविदेका
भासे भासे भजति भवता बृंहिता संविदेका ॥३९॥

इति सिद्धसिद्धान्तसंग्रहे चतुर्थोपदेशः।

——:०:——

# अथ पञ्चमोपदेशः

समरसकरणं वदाम्यथाहं परमपदाखिलपिण्डयोरिदानीम् ।
यदनुभवबलेन योगनिष्ठा इतरपदेषु गतस्पृहा भवन्ति ॥१॥

परपिण्डसुखं स्वपिण्डकान्तं प्रथमोक्तक्रमतो विधाय चित्ते ।
परमेण पदेन तस्य कुर्य्याद्रससाम्यं मतिमान् गुरूक्तिदृष्ट्या ॥२॥

परमं पदमात्मवेद्यमेकं निखिलात्यन्तविभासिमात्रमुक्तम् ।
अयमर्थ उदाहृतोऽस्ति दृष्टो जठराख्याधरसंहितानिबन्धे ॥३॥

यथा—

यत्र बुद्धिर्मनो नास्ति सत्ता संवित्परा कला ।
ऊहापोहौ न तर्कश्च वाचा तत्र करोति किम् ॥४॥

वाङ्मात्राद् गुरुणा सम्यक् कथं तत्पदमीर्य्यते ।
तस्मादुक्तं शिवेनैव स्वसम्वेद्यं परं पदम् ॥५॥

नानाविचारचातुर्य्यचर्चाधिक्याद्घनाश्रयात् ।
निरुपाधितयोपाधिशून्यत्वात्तत्स्ववेद्यता ॥६॥

पारम्पर्य्याप्तसन्मार्गदर्शने यस्य योग्यता ।
स गुरुर्भवति श्रीमानात्मविश्रामकारणम् ॥७॥

तेन सन्दर्शिते मार्गे स्वसंवेद्यस्य दर्शनम् ।
भवतीति गुरुं देवभावेन परिचिन्तयेत् ॥८॥

तद्दृक्सरोजकरुणार्द्रकटाक्षपातात्
स्वात्मैकवेद्यकतया मुनिभिः स्वपिण्डम् ।
सर्वं स्वसिद्धिफलवर्गमपास्य लब्ध-
नैरुत्थ्यतः समरसं क्रियते कृतार्थैः ॥९॥

सिद्धान्तमेतमनुशास्य निरुत्थितिश्री-
लाभाभ्युपायकथने कुरुतेऽथ यत्नम्।
स्वस्वाशयप्रलयकर्ममुखानुसन्धे-
रावेशतो भवति कश्चन तत्र नैजः ॥१०॥

निजावेशान्निबिडतमनैरुत्थ्यविधिव-
न्महानन्दावस्था स्फुरति वितता कापि सततम्।
ततः संविन्नित्यामलसुखचमत्कारगमक-
प्रकाशप्रोद्बोधो यदनुभवतो भेदविरहः ॥११॥

साक्षात्तयास्य कलनात् स्फुरति प्रकामं
चैतन्यभासकमभिन्नमपारमङ्के ।
पुंसः पदं परमनाम समभ्युदेति
यस्यानुभूतिबलतो निजपिण्डवित्तिः ॥१२॥

विज्ञाय पिण्डमथ सम्यगिति प्रकारा-
दारात्पदे परमनाम नितं (?) विधाय।
ऐक्यं विधाय निजरश्मिपरावृतात्मा-
श्वभ्याससून्मिषिरुदेति ततो द्वितीया ॥१३॥

तदुन्मेषप्रत्याहरणभवमाहुः समरस-
क्रियाभूतं यस्मान्निजकिरणपुञ्जं निजतया।
प्रपश्यन्तस्तस्मान्निखिलमनुसन्धाय मुनयः
स्वरूपेऽङ्गीकृत्य स्वतःफलसिद्धयै व्यवसिताः ॥१४॥

मुनीनां पिण्डसंसिद्धौ सिद्धयः सन्ति सन्निधौ।
एतमर्थं विनिश्चित्य कश्चिच्छ्लोकेन चोक्तवान् ॥१५॥

यस्मिन् ज्ञाते जगत्सर्वं प्रसिद्धं भाति लीलया।
सिद्धयः स्वयमायान्ति तस्माज्ज्ञेयं परं पदम् ॥१६॥

सहजं संयमयुतं सोपायं साद्वयं क्रमात्।
ज्ञानं संसाधयेत्तच्च स्वविश्रान्तिरितीरितम् ॥१७॥

विश्वातीतः परेशानो विश्वरूपेण तिष्ठति।
इत्येकं सहजं त्वन्यद्विश्वस्यात्मनि दर्शनम् ॥१८॥

प्रस्फुरद्रूपवृत्तीनां कृत्वा संयममात्मनि ।
यद्धारणं तदेवात्र ससंयममिति स्मृतम् ॥१९॥
प्रकाशमयमात्मानं स्वयमेव स्वरूपतः ।
एकीकृत्य सदा लौल्यात्स्थित्तिः सोपायशब्दभाक् ॥२०॥
अजातिमत्त्वदृक् प्राज्ञैः सा द्वितीयमिति स्मृतम् ।
चत्वार एते भावाः स्युः परमोदयहेतवः ॥२१॥
तथा च परमो योगी सुतृप्तो निर्विकल्पकः ।
सदा निरुत्थापनया तिष्ठतीति प्रसिद्धचति ॥२२॥
परमस्य पदस्याप्तौ साधनं केनचित्पुरा ।
यत्र श्लोकाष्टके प्रोक्तं तदिदं दृश्यतामिह ॥२३॥
सहजं स्वात्मसंवित्तिः संयमः सर्वनिग्रहः ।
सोपायं स्वस्वविश्रान्तिरद्वैतं परमं पदम् ॥२४॥

ज्ञात्वैवं सद्गुरोर्वक्त्रान्नान्यथा शास्त्रकोटिभिः ।
न कर्तृत्वान्न विज्ञानान्न बलाद्वेदपाठनात् ॥२५॥

न ज्ञानान्न च वैलक्ष्यात्कर्त्रभ्यासान्न वासनात् ।
न वैराग्यान्न नैराश्याद् घटनात्प्राणधारणात् ॥२६॥
न मुद्राधारणाद्वा स्यान्न मौनवचनाश्रयात् ।
औदासीन्यान्न निर्वाणान्न कायक्लेशमोचनात् ॥२७॥
न वास्यान्न च सन्देशान्न नानाव्रतधारणात् ।
न षड्दर्शनवेषादिधारणान्न च मुण्डनात् ॥२८॥

अनन्तोपाययत्नेभ्यः प्राप्यते परमं पदम् ।
गुरुदृक्पातमात्राणां हठानां सत्यवादिनाम् ॥२९॥

कथनाद् दृष्टिपाताद्वा सान्निध्याद्वावलोकनात् ।
प्रसादात्सद्गुरोः सम्यक् प्राप्यते परमं पदम् ॥३०॥

अन्वयव्यतिरेकाभ्यां सार्द्धश्लोकद्वयोक्तितः ॥
श्रीगुरोर्लक्षणं प्राह यज्ज्ञानान्मुच्यते भयात् ॥३१॥

सम्यगानन्दजननं सद्गुरुः सोऽभिधीयते ॥
निमिषार्द्धं तदर्द्धं वा यद्वाक्यस्यावलोकनात् ।
आत्मानं स्थिरमाप्नोति तस्मै श्रीगुरवे नमः ॥३२॥

नानाविकल्पविश्रान्तिं कथनात्कुरुते तु यः ।
सद्गुरुः स तु विज्ञेयो न तु मिथ्याविकल्पकः ॥३३॥

परपदमधिगन्तुमुत्सुकानां
यदमलदृक्करुणाकटाक्षमाला ।
जयति दृढतराधिरोहणश्रीः
परमनिधिः स ममास्ति देशिकेन्द्रः ॥३४॥

सम्यक्चैतन्यविश्रान्तेरुपदेशस्तु सम्मतम् ।
यथा स्यात्सामरस्याख्यं तत्परं परमं पदम् ॥३५॥

यत्कारुण्यविलोकनादपि भवेच्चिद्विश्रमः पारदः
तस्मिन् श्रीकरुणासुधारसनिधौ चेतोऽस्तु मग्नं गुरौ ।
नान्यस्मिन्बहुवादतर्कमकरोच्छालातिभीतिप्रदे
दुर्भेदभ्रमधारकेऽतिकठिने क्षारोदधौ लौकिके ॥३६॥

उपदेशो निगरणपदवाच्यतयोच्यते ।
तत् करोति यतस्तस्माद् गुरुरित्यभिधीयते ॥३७॥

गुरुदोषगुणनिरूपणपुरःसरं गुरुसेवाफलं
विंशतिश्लोकैः कश्चिदाह —

ज्ञानहीनो गुरुस्त्याज्यो मिथ्यावादी विकल्पकः ।
स्वविश्रांतिं न जानाति परेषां स करोति किम् ॥३८॥

शिलायाः किं परं पारं शिलासङ्घात्प्रतार्यते ।
स्वयं तीर्णो भवेद्योऽसौ स परं तारयत्यलम् ॥३९॥

विकल्पजागराद् घोराच्चिन्ताकाले न दुस्तरात् ।
प्रपञ्चवासनावर्त्तात्कलाजालसमाकुलात् ॥४०॥

वासनालहरीवेगात्स्वस्थस्तारयितुं क्षमः ।
स्वस्थैर्येणोपदेशेन लोनो(?)त्थानेन तत्क्षणात् ॥४१॥

परानन्दमयो भूत्वा निश्चयः स्थिरतां व्रजेत् ।
कुलानि कोटिकोटीनां तारयत्येव तत्क्षणात् ॥४२॥

धारयत्येव दृक्पातात्कथनाद्वावलोकनात् ।
तारणेच्छुर्वरं दत्ते स्वस्वरूपे स्थिरो भव ॥४३॥

अतोऽसौ मुच्यते शिष्यो जन्मसंसारबन्धनात् ।
अतस्तं सद्गुरुं साक्षात् त्रिकालमभिवादयेत् ॥४४॥

सर्वाङ्गप्रणिपातेन शिक्षां कृत्वा गुरुर्भवेत् ।
किमत्र बहुनोक्तेन शास्त्रकोटिशतेन च ॥४५॥

लब्धविश्रामवित्तानां योगिनां दृढचेतसाम् ।
स्वस्वमध्यनिमग्नानां निरुत्थानां विशेषतः ॥४६॥

निमिषार्द्धात् स्फुटं भाति दुर्लभं परमं पदम् ।
तस्मिन्पिण्डे भवेल्लीनं सहसा नात्र संशयः ॥४७॥

लीने पिण्डे भवेद्योगी सर्वज्ञः सिद्धिपारगः ।
इच्छावेगी स्वयं कर्त्ता लीलयैवाजरामरः ॥४८॥

अवध्यो देवदैत्यानां क्रीडते भैरवो यथा ।
इत्येवं निश्चयो योऽसौ क्रमादाप्नोति लीलया ॥४९॥

असाध्याः सिद्धयः सर्वाः सत्यमीश्वरभाषितम् ।
प्रथमे रोगनिर्मुक्तः सर्वलोकप्रियो भवेत् ॥५०॥

काङ्क्षते दर्शनं तस्य स्वात्मा गूढस्य नित्यशः ।
द्वितीये वत्सरे काव्यं कुरुते तत्त्वभाषया ॥५१॥

प्रजायते दिव्ययोगी दूरश्रावी न संशयः ।
वाक्सिद्धिः पञ्चमे वर्षे परकायप्रवेशनम् ॥५२॥

षड्भिर्न छिद्यते शस्त्रैर्वज्रपातैर्न भिद्यते ।
वायुवेगो क्षितित्यागी दूरदर्शी च सप्तमे ॥५३॥

महासिद्ध्यष्टकं सम्यगष्टमे वत्सरे भवेत् ।
नवमे वज्रकायः स्यात् खेचरो दिक्चरो भवेत् ॥५४॥

दशमे पवनाद्वेगी यत्रेच्छा तत्र गच्छति ।
सम्यगेकादशे वर्षे सर्वज्ञः सिद्धिभाग् भवेत् ॥५५॥

द्वादशे शिवतुल्योऽसौ कर्त्ता हर्त्ता स्वयं भवेत् ।
त्रैलोक्ये पूज्यते सिद्धः सत्यं भैरवभाषितम् ॥५६॥

एवं द्वादशवर्षे तु सिद्धयोगी महाबलः ।
जायते सद्गुरोः पादप्रसादान्नात्र संशयः ॥५७॥

अनुबुभूषति योनिजविश्रमं स गुरुपादसरोरुहमाश्रयेत् ।
तदनुसंसरणात्परमं पदं समरसीकरणं च न दूरतः ॥५८॥

अनन्यभावेन निरुत्थितिश्रीलाभेन चाञ्चल्यविधूननेन ।
अवस्थितिः श्रीकरुणासुधाब्धिगुरुप्रसादाद्भवतीति सत्यम् ॥५९॥

इति सिद्धसिद्धान्तसङ्ग्रहे पिण्डपरमपदयोः समरसकरणं
नाम पञ्चमोपदेशः ।

# अथ षष्ठोपदेशः

निरूप्य सर्वं विषयमधिकारी निरूप्यते ।
अवधूतो भवेत्सोऽत्र तल्लक्षणमिदं यथा ॥१॥

प्रकृतिजन्यविकारविधूननं कलयितुं भजतीह समर्थताम् ।
यदवधूततया तदुदीर्यते रचितसंसृतिपारगतिर्जनः ॥२॥

लक्षणान्तरमप्याह कश्चित् –
केशपाशतरङ्गाणां व्रजं येन विकुण्ठितम् ।
सर्वावस्थाविनिर्मुक्तः सोऽवधूतोऽभिधीयते ॥३॥

सकलोच्चं स्थिरं पीनं संवेद्यं वासनोक्तितम् (?) ।
कौपीनकं कटौ यस्य सोऽवधूतोऽभिधीयते ॥४॥

कस्य भावमयैः सूत्रैः स्वीकारस्थैर्य्यतां गतैः ।
कन्था विरचिता येन सोऽवधूतोऽभिधीयते ॥५॥

मुक्तिद्वारे मतिर्यो वै प्राप्तकोषप्रकाशकः ।
मायाविकारानापन्नः स सात्त्विक उदाहृतः ॥६॥
क्षपणं चित्तवृत्तीनां रागद्वेषविलुण्ठनम् ।
कुरुते व्योममग्नो यस्तस्मात् क्षपणको भवेत् ॥७॥

भ्रान्तिकौरं जनं कृत्वा यो रक्तविवरे सदा ।
प्रबुद्धो यः स्वयं बुद्धः सद्यः सोऽत्राभिधीयते ॥८॥

प्रसरं भासते शक्तिः सङ्कोचं भासते शिवः ।
तयोः संयोगकर्त्ता यः स भवेद्योगयोगराट् ॥९॥

विश्वातीतं यदा विश्वमेकमेवावभासते ।
संयोगेन यदा यस्य सिद्धयोगी भवेत्तु सः ॥१०॥

सर्वासां निजवृत्तीनां विसृतिं भजते तु यः ।
स भवेत्सिद्धसिद्धान्ते सिद्धयोगी महाबलः ॥११॥

उदासीनवदासीनः स्वस्थोऽन्तर्निजभासकः ।
महानन्दमयो धीरः स भवेत्सिद्धयोगिराट् ॥१२॥

परिपूर्णः प्रसन्नात्मा सर्वासर्वप्रदोऽपरः ।
निरुत्थो निर्भरानन्दः स भवेत् सिद्धयोगिराट् ॥१३॥

गतेन शोकेन भयेन वीप्साप्राप्तेन हर्षं न करोति योगी ।
आनन्दपूर्णो निजबोधलीनो न बाधते कालपथो न नित्यम् ॥१४॥

एतेषामुपदेशानां सूचितानां पृथक् पृथक् ।
जायते तत्र विश्रान्तिः सा विश्रान्तिश्च जायते ॥१५॥

यो गङ्गापदपद्मभक्तिविमलः शाण्डिल्यगोत्रोद्भवः
चञ्चच्छारदचन्द्रिकासहचरीं कीर्त्तिन्नयन्विष्टपे ।
शौर्य्यौदार्यमुखैर्गुणैरविरलैरालम्ब्यमानोऽनिशं
स श्रीकृष्णविभुः स्मरारिनगरे ग्रन्थं मुदाचीकरत् ॥१६॥

कृष्णराजाज्ञया काश्यां सिद्धसिद्धान्तसङ्ग्रहः ।
कृतो यो बलभद्रेण श्रीकृष्णस्तेन तुष्यतु ॥१७॥

इति सिद्धसिद्धान्तसङ्ग्रहेऽवधूतादिलक्षणः षष्ठोपदेशः ।

# अथ सप्तमोपदेशः

चार्वाकाश्चतुराः स्वतर्कनिपुणा देहात्मवादे रताः
सर्वे सन्धिरताः सदैव परताधानाश्रिताः सात्त्विकाः ।
कर्त्तारं प्रभजन्ति चैव यमनाः पापे रता निर्दया-
स्तेषामैहिकमल्पमेव हि सुखं सत्यं न मोक्षः परम् ॥१॥

सीहट्टे मस्तकान्ते त्रिकुटपुटबिले ब्रह्मरन्ध्रे ललाटे
भ्रूनेत्रे नासिकाग्रे श्रवणपथवरे घण्टिकाराजदण्डे ।
कण्ठे हृन्नाभिमूले त्रिकमकुहरे ह्युड्डियानेऽथ शूले
ये त्वेवं स्थानमग्नाः परमपदमहो नास्ति तेषां निरुत्थम् ॥२॥

आदौ पूरककुम्भरेचकविधौ नाडीपथं शोधितं
कृत्वा हृत्कमलोदरे च सहसा चित्तं समं मूर्छितम् ।
तस्मादव्ययमक्षयं परकलं चोङ्कारदीपं शुभं
ये पश्यन्ति समाहिताः पदमहो नास्ति तेषां निरुत्थम् ॥३॥

गोहाटे दीप्तिपुञ्जं प्रलयशिखिनिभं सिन्धुजालन्धरे च
शृङ्गाटे ज्योतिरेकं तडिदिव तरलं ब्रह्मनाडयन्तराले ।
कालान्ते विद्युदाभं तदुपरि शिखरे कोटिमार्त्तण्डचण्डे
ये नित्यं संशयन्ते परमपदमहो नास्ति तेषां निरुत्थम् ॥४॥

लिङ्गाच्चण्डाकुलान्ते मनपवनगमे(?) ब्रह्मग्रन्थ्यादिभेदे
कृत्वा बिन्दुं नयन्ते भ्रमरपदमहाशङ्खमम्भोदरोधे ।
नेत्रान्तर्नादघोषं गगनगुणमयं वज्रदण्डी क्रमेण
ये कुर्वन्तीह कष्टात्परमपदमहो नास्ति तेषां निरुत्थम् ॥५॥

सम्यक्चालनदोहनेन सततं दीर्घीकृतां लम्बिकां
ताल्वभ्यन्तरदर्शितान्तदशमद्वारोदरे शङ्खिनीम् ।
प्राप्तां मध्यमसम्पुटे (?) पुटां सप्तादर्शी कोटरां
पीत्वा षड्विधपानकाष्ठभजनं वाञ्छन्ति ये मोहिताः ॥६॥

गुह्यात्पश्चिमपूर्वमार्गमुभयं रुद्धानिलं मध्यमं
नीत्वा ध्यानसमाधिलक्ष्यकरणैर्नानासमाध्यासनैः ।
प्राणापानगमागमेन सततं हंसोदरे संघटा-
घेनास्यैव नयन्ति ये भवजले मज्जन्त्यहो दुःखिताः ॥७॥

शक्त्याकुञ्चनमग्निदीपकरणं चाधारसम्पीडनात्
ज्ञात्वा कुण्डलिनीप्रबोधनमनो नादादिना मूर्द्धनि ।
नीत्वा पूर्णगिरिं निपातनमनः कुर्वन्ति ये स्वाश्रये
खण्डज्ञानरतास्तु ते निजपदं तेषां ह्यदूरं परम् ॥८॥

बन्धं भेदं च मुद्रां गलबिलचिबुकं मध्यमार्गं सुषुम्णां
चन्द्रार्के सामरस्यं शमदमनियमैर्नादबिन्दुं कलान्ते ।
ये नित्यं कलयन्ते तदनु च मनसामुन्मनो योगयुक्तं
तेषां लोकामयन्ते निजसुखविमुखाः कर्मदुःखौघभाजः ॥९॥

अष्टाङ्गं योगमार्गं कुलपुरुषमतं षण्मुखीचक्रभेद-
मूर्ध्वाधो बाह्यमध्ये रविकिरणनिभं सर्वतो व्याप्तिसारम् ।
दृष्ट्यग्रे वीक्षयन्ते तरलजलसमं नीलवर्णं तमो वा
एवं ये भावयन्ते विमलमतयस्तेऽपि हा कष्टभाजः ॥१०॥

आदौ सारणशङ्खसारणमतः कृत्वा महासारणं
सम्पूर्णं प्रतिसारणं विधिबलाद्दृष्टिस्तथा निर्मला ।
आज्ञालो हठयोगयोगकलया सद्दीप्तसन्तूलिकां
ये कुर्वन्ति च कारयन्ति च सदा भ्राम्यन्ति बाधन्ति च ॥११॥

शङ्खक्षालनमन्तरं रसनया ताल्वोष्ठलीलासमं
वीते तूल्लुठनं कवाटममरीपानं त्रिधा खर्परी ।
वीर्य्यंद्रावितमात्मजं विकलये ग्रासं च लेपञ्च वा
कुर्वे तीर्थजले स्यात् (?) तेन हि फलं तेषां तु सिद्धान्तजम् ॥१२॥

घण्टाकालहमर्द्दलं त्वथ महाभेरीनिनादं यथा
सम्यङ् नादमनाहतं ध्वनियुतं शृण्वन्ति ये तादृशम् ।
पिण्डे सिद्धिपरं निरन्तरतया ब्रह्माण्डमध्येऽथ वा
तेषां सिद्धमतेस्कतेः(?) समुदितं सत्यं परं लभ्यते ॥१३॥

वैराग्यामृतपल्लवेन सलिलं कन्दं फलं मूलकं
भुक्त्वा यो वनवास एव रमते चाऽनेकदेशान्तरे ।
स्थित्वा सादितनिश्चयेन मनसा रात्रौ दिने वीक्ष्यते
स त्यक्त्वाखिलभावमेकममलं प्राप्नोत्यहो स्वं पदम् ॥१४॥

इति श्रीसिद्धसिद्धान्तसङ्ग्रहे सप्तमोपदेशः समाप्तिमगमत् ।

# शुद्धिपत्रम्

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ४ | पुष्टये | तुष्टये |
| ,, | ७ | कार्य्यकारणकर्तृत्वं | कार्य्यकारणकर्तृत्वं |
| ,, | १२ | अर्धामात्रा | अर्धमात्रा |
| ,, | १६ | अव्थक्तता | अव्यक्तता |
| २ | ३ | निरन्तरत्वं | निरन्तरत्वं |
| ,, | १७ | अक्षयत्वके | अक्षयत्वेक |
| ,, | २२ | स्वर्गगत्वम् | सर्वगत्वम् |
| ४ | १६ | नथा | तथा |
| ,, | २३ | ल्युः | स्युः |
| ,, | २५ | ममत्दं | ममत्वं |
| ,, | ,, | वर्तिनः | वर्त्तिनः |
| ५ | २ | हर्षौ | हर्षौ |
| ,, | २१ | काल | काम |
| ,, | २२ | इति | रति |
| ६ | १ | समुच्लत्व | समुच्चलत्व |
| ,, | ११ | फला | कला |
| ,, | १५ | द्व | द्वे |
| ८ | २ | अस्थाम् | अस्थ्नाम् |
| १० | २५ | निरोघयेत् | निरोधयेत् |
| १२ | ६ | नावाग्रतो | नासाग्रतो |
| ,, | १३ | ऊर्द्ध | ऊर्द्ध्व |
| १५ | १ | यीगि | योगि |
| ,, | १३ | वण्डाग्रे | दण्डाग्रे |
| ,, | १८ | स्वमावो | स्वभावो |
| १६ | ४ | स्वनाव | स्वभाव |

| | | | |
|---|---|---|---|
| १६ | ६ | सनातनत्ब | सनातनत्व |
| ,, | ,, | अविकृत | अधिकृत |
| ,, | १० | घरः | धरः |
| ,, | १७ | अस्त्ति | अस्ति |
| ,, | २२ | परिपूर्णं | परिपूर्ण |
| ,, | २६ | सर्वकर्तृत्द | सर्वकर्तृत्व |
| २० | २ | निर्धमंत्वाद् | निर्धमत्वाद् |
| २१ | १ | चक्रषु | चक्रेषु |
| ,, | ५ | मलाधारे | मूलाधारे |
| २५ | ४ | स्थित्तिः | स्थितिः |
| ३१ | १२ | तेपां | तेषां |
| ३२ | १२ | ह्यदूरं | हि दूरं |
| ,, | २३ | आज्ञालो | आज्ञाली |

# श्लोकानुक्रमणी

—o—

